देहस्य मोक्षो नो मोक्षो न दण्डस्य कमण्डलोः ।
अविद्याहृदयग्रन्थिमोक्षो मोक्षो यतस्ततः ॥ ५५९ ॥

कुल्यायामथ नद्यां वा शिवक्षेत्रेऽपि चत्वरे ।
पर्णं पतति चेत्तेन तरोः किं नु शुभाशुभम् ॥ ५६० ॥

पत्रस्य पुष्पस्य फलस्य नाशव-
द्देहेन्द्रियप्राणधियां विनाशः ।
नैवात्मनः स्वस्य सदात्मकस्या-
नन्दाकृते र्वृक्षवदास्त एषः ॥ ५६१ ॥

प्रज्ञानघनइत्यात्मलक्षणं सत्यसूचकम् ।
अनूद्यौपाधिकस्यैव कथयन्ति विनाशनम् ॥ ५६२ ॥

अविनाशी वा अरेऽयमात्मेति श्रुतिरात्मनः ।
प्रब्रवीत्यविनाशित्वं विनश्यत्सु विकारिषु ॥ ५६३ ॥

पाषाणवृक्षतृणधान्यकटाम्बराद्या
दग्धा भवन्ति हि मृदेव यथा तथैव ।
देहेन्द्रियासुमनआदिसमस्तदृश्यं
ज्ञानाग्निदग्धमुपयाति परात्मभावम् ॥ ५६४ ॥

विलक्षणं यथा ध्वान्तं लीयते भानुतेजसि ।
तथैव सकलं दृश्यं ब्रह्मणि प्रविलीयते ॥ ५६५ ॥

घटे नष्टे यथा व्योम व्योमैव भवति स्फुटम् ।
तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्स्वयम् ॥ ५६६ ॥

क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले ।
संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः ॥ ५६७ ॥

एव विदेहकैवल्य सन्मात्रत्वमखण्डितम् ।
ब्रह्मभावं प्रपद्यैप यतिर्नावर्तते पुनः ॥ ५६८ ॥

सदात्मैकत्वविज्ञानदग्धाविद्यादिवर्ष्मणः ।
अमुष्य ब्रह्मभूतत्वाद्ब्रह्मण· कुत उद्भवः ॥ ५६९ ॥

मायाक्लृप्तौ बन्धमोक्षौ न स्त स्वात्मनि वस्तुतः ।
यथा रज्जौ निष्क्रियायां सर्पाभासविनिर्गमौ ॥ ५७० ॥

आवृते· सदसत्त्वाभ्या वक्तव्ये बन्धमोक्षणे ।
नावृतिर्ब्रह्मण काचिदन्याभावादनावृतम् ।
यद्यस्त्यद्वैतहानि स्याद्द्वैत नो सहते श्रुतिः ॥ ५७१ ॥

बन्धश्च मोक्षश्च मृषैव मूढा
बुद्धेर्गुण वस्तुनि कल्पयन्ति ।
दृगावृति मेघकृता यथा रवौ
यतोऽद्वयासङ्गचिदेकमक्षरम् ॥ ५७२ ॥

अस्तीति प्रत्ययो यश्च यश्च नास्तीति वस्तुनि ।
बुद्धेरेव गुणावेतौ न तु नित्यस्य वस्तुन ॥ ५७३ ॥

अतस्तौ मायया क्लृप्तौ बन्धमोक्षौ न चात्मनि ।
निष्कले निष्क्रिये शान्ते निरवद्ये निरजने ।
अद्वितीये परेतत्त्वे व्योमवत्कल्पना कुतः ॥ ५७४ ॥

न निरोधो न चोत्पत्ति र्न बद्धो न च साधकः ।
न मुमुक्षु र्नवै मुक्त. इत्येपा परमार्थता ॥ ५७५ ॥

सकलनिगमचूडास्वान्तसिद्धान्तगुह्य
परमिदमतिगुह्यं दर्शितं ते मयाद्य ।
अपगतकलिदोषः कामनिर्मुक्तबुद्धि-
स्तदतुलमसकृत्त्वं भावयेद मुमुक्षुः ॥ ५७६ ॥

इति श्रुत्वा गुरोर्वाक्य प्रश्रयेण कृतानति ।
स तेन समनुज्ञातो ययौ निर्मुक्तबन्धन ॥ ५७७ ॥

गुरुरेप सदानन्दसिन्धौ निर्मग्नमानस ।
पावयन्वसुधा सर्वा विचचार निरन्तर ॥ ५७८ ॥

इत्याचार्यस्य शिष्यस्य सवादेनात्मलक्षणम् ।
निरूपित मुमुक्षूणा सुखवोधोपपत्तये ॥ ५७९ ॥

हितमिदमुपदेशमाद्रियन्ता
विहितनिरस्तसमस्तचित्तदोपा ।
भवसुखविमुखा प्रशान्तचित्ता
श्रुतिरसिका यतयो मुमुक्षवो ये ॥ ५८० ॥

ससाराध्वनि तापभानुकिरणप्रोद्भूतदाहव्यथा-
खिन्नाना जलकाङ्क्षया मरुभुवि भ्रान्त्या परिभ्राम्यताम् ।
अत्यासन्नसुधाम्बुधि सुखकर ब्रह्माद्वय दर्शय-
न्त्येषा शकरभारती विजयते निर्वाणसदायिनी ॥ ५८१ ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छकरभगवत कृतौ विवेकचूडामणि
शृगगिरिजगद्गुरुश्रीचन्द्रशेखरभारतीस्वाम्यनुगृहितव्याख्यासनाथ
समाप्त ॥

श्लोकानुक्रमणिका

॥ इति श्रीविवेकचूडामणिश्लोकानां अनुक्रमणिका समाप्ता ॥